श्रीः

श्रीमते निगमान्तमहादेशिकाय नमः
श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि॥

श्रीकाञ्चीपूर्ण विरचितम्

# ॥ श्रीदेवराजाष्टकम् ॥

*This document[*] has been prepared by*

***Sunder Kidambi***

*with the blessings of*

श्री रङ्गरामानुज महादेशिकन्

**His Holiness *śrīmad āṇḍavan* of *śrīraṅgam***

[*]This was typeset using LaTeX and the **skt** font.

श्रीः

श्रीमते रामानुजाय नमः

# ॥ श्रीदेवराजाष्टकम् ॥

श्रीमत् काञ्चीमुनिं वन्दे कमलापतिनन्दनम्।
वरदाङ्घ्रिसदा सङ्ग रसायन परायणम्॥

देवराजदयापात्रं श्रीकाञ्चीपूर्णमुत्तमम्।
रामानुजमुनेर्मान्यं वन्देऽहं सज्जनाश्रयम्॥

नमस्ते हस्तिशैलेश ! श्रीमन्नम्बुजलोचन !।
शरणं त्वां प्रपन्नोऽस्मि प्रणतार्तिहराच्युत॥ १ ॥

समस्त प्राणिसंत्राण प्रवीण करुणोल्बणाः।
विलसन्तु कटाक्षास्ते मय्यस्मिन् जगतां पते॥ २ ॥

निन्दिताचारकरणं निवृत्तं कृत्यकर्मणः।
पापीयाम्सममर्यादं पाहि मां वरद प्रभो॥ ३ ॥

संसार मरुकान्तारे दुर्व्याधिव्याघ्रभीषणे।
विषयक्षुद्रगुल्माढ्ये तृषापादपशालिनि॥ ४ ॥

पुत्रदारगृहक्षेत्रमृगतृष्णाम्बुपुष्कले।
कृत्याकृत्यविवेकान्धं परिभ्रान्तमितस्ततः॥ ५ ॥

अजस्रं जाततृष्णार्तमवसन्नाङ्गमक्षमम्।
क्षीणशक्तिबलारोग्यं केवलं क्लेशसंश्रयम्॥ ६ ॥

संतप्तं विविधैर्दुःखैः दुर्वचैरेवमादिभिः।
देवराज ! दयासिन्धो ! देवदेव ! जगत्पते !॥ ७ ॥

त्वदीक्षणसुधासिन्धु वीचिविक्षेपशीकरैः।
कारुण्यमारुतानीतैः शीतलैरभिषिञ्च माम्॥ ८ ॥

॥ इति श्रीदेवराजाष्टकं समाप्तम् ॥